श्रीमद्धनुमद्भीममध्वांतर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवायनमः ॥ श्रीप्राणपतिमानम्यपूर्णबोधादिदेशिकान् ॥ ई
शावास्योपनिषदःकरिष्याम्यर्थसंग्रहं ॥ अस्याउपनिषदःस्वायंभुवोमनुःऋषिः । यज्ञनामाहरिर्देवता। अनुष्टुबादियथायोग्यंछं
दोज्ञेयं। अनेजदित्यादिनातत्वंविवक्षुरुपदिष्टंतत्वंअधिकारिणएवहृद्यवतिष्ठतेनान्यस्येतिएतदुपनिषदधिकारसिध्यर्थंविच्छिन्न
विषयतृष्णत्वंतावदाद्येनमंत्रेणसयुक्तिकंविधत्ते। ईशेति । यत्किंचजगदिदंतत्सर्वंप्रवृत्त्यर्थंआत्म(नई)निईशावास्यं। आवासम
र्हतीत्यावास्यं । ईशस्यावास्यंईशावास्यं । ईशानुप्रविष्टमित्यर्थः । तदेवानुप्राविशदित्यादेः । अतोस्वतंत्रमितिभावः । किंच

**हरिःॐ ॥ ईशावास्यमिदꣳसर्वंयत्किंचजगत्यांजगत् । तेनत्यक्तेनभुञ्जीथामागृधःकस्यस्विद्धनं ॥ १ ॥**
**कुर्वन्नेवेहकर्माणिजिजीविषेच्छतꣳसमाः । एवंत्वयिनान्यथेतोस्तिनकर्मलिप्यतेनरे ॥ २ ॥**

जगत्यांप्रकृताविदंसर्वमाश्रितं । साचेशायत्ताअतोप्यस्वतंत्रं । ईशएवस्वतंत्रः । तेनकारणेन तेनईश्वरेणत्यक्तेनदत्तेनवित्तेन ।
यदृच्छालब्धेनेतियावत् । भुंजीथाःभोगंकुर्याः । कस्यस्वित् कस्यापिराजादेःसकाशाद्धनंमागृधःनाकांक्षेथाः। ईशादन्यस्या
स्वातंत्र्येणतस्यदानेसामर्थ्याभावादीशदत्तेनैववर्तेतेतिभावः॥१॥तृष्णाविच्छेदवत्स्वोचितकर्मानुष्ठानमपिज्ञानार्थिनामावश्यक
मित्याह।कुर्वन्नेति।शतंसमाः शतंवर्षाणि। कालाध्वनोरत्यंतसंयोगइतिद्वितीया। इहमानुषादिजन्मनियावज्जिजीविषेत्जीवितु ॥ १ ॥
मिच्छेत्तावत्कर्माणिकुर्वन्नेवआमरणंभगवत्पूजात्मकानिअसंकल्पितफलानिस्वोचितानिकर्माणिसर्वथाकुर्यादितियावत्। कुतः।

एवंकर्माणिकुर्वतिनरेमनुष्यमात्रेपित्वयिकर्मपापंनलिप्यते ॥ स्वोचितेनासंकल्पितफलेनकर्मणाभगवत्पूजांकुर्वंतंअल्पाधिका
रिणमपिनप्रागुत्तराणिपापानिबाधंते। ततश्चज्ञानाधिकारीसभवतीतियावत्। इतःकर्मकरणात्अन्यथाअकरणेकर्मपापंनलिप्य
तइतिनास्ति । भगवत्पूजामकुर्वंतंपापानिबाधंतएव । ततश्चासौज्ञाने नाधिक्रियते। अतश्चकर्माणिकुर्यादिति । पुरुषार्थनयेनि
यमाच्चेतिसूत्रभाष्यादौनरेज्ञानिन्यपित्वयिकर्मनलिप्यतइतिनास्तिइत्यपरोक्षज्ञानिनोपिकर्माकरणेमुक्तावानंदह्रासरूपपापकर्म
लेपोस्त्येवेतिज्ञानिपरतयामंत्रोव्याख्यातः ॥ २ ॥ एवंप्राप्ताधिकारंप्रतिपरमात्मतत्वबुभुत्साजननायविपरीतज्ञानिनोनिंदामा

**असुर्यानामतेलोकाअंधेनतमसावृताः । ताꣳस्तेप्रेत्याभिगच्छंतियेकेचात्महनोजनाः ॥ ३ ॥**
**अनेजदेकंमनसोजवीयोनैनद्देवाआप्नुवन्पूर्वमर्षत् ।**
**तद्धावतोऽन्यानत्येतितिष्ठत्तस्मिन्नपोमातरिश्वादधाति ॥ ४ ॥**

ह । असुर्याइति । सुष्टुरमणंसुर्यं । सुपूर्वस्यरमतेर्ड्यप्रत्ययः । तद्विरुद्धमसुर्यंमहादुःखं । असुर्यमेष्वस्तीत्यसुर्याः । अर्शआद्य
च्प्रत्ययांतोयं। महादुःखवत्त्वादसुर्याः । असुरप्राप्यत्वाद्वासुर्याः । अंधेनतमसा । अंधयतीतिव्युत्पत्त्यानिबिडांधकारेणे
त्यर्थः। आवृतास्तेप्रसिद्धायइतिशेषः । लोकास्तान्प्रेत्यमृत्वाभिगच्छंति । तेकेइत्यतउक्तं । यइति। आत्महनः । यथावदात्मा
नमज्ञात्वावैपरीत्येनजानंतोयेकेचनवर्तंतेतेसर्वेपिअभिगच्छंतीतिनाम निश्चितमेतदित्यर्थः ॥ ३ ॥ इदानींपरमात्मतत्वमुपदि

शति । अनेजदित्यादिमंत्रद्वयेन । तत्परमात्मस्वरूपं । अनेजत् । एजृकंपने । अकंपमानंनिर्भयत्वादितिभावः । एकंप्रधा
नं । मनसोपिजवीयः । वेगवत्तरं । एनत्परब्रह्मस्वरूपंदेवाःनाप्नुवन्साकल्येननव्यजानन् । ब्रह्मतुपूर्वंअनादिकालंस्वभाव
तइतियावत् । अर्षत्ऋषज्ञानेसर्वंव्यजानात् । आडागमाभावश्छांदसः । तद्ब्रह्मतिष्ठत्विद्यमानमेवसत्धावतोवेगेनग
च्छतोन्यान्जनानत्येतिअतिक्रम्यवर्तते । अचिंत्यशक्तित्वात्सर्वगतत्वाच्चेतिभावः । तस्मिन्हरौमातरिश्वामुख्यवायुःआसमं
तात्पालयंतीतिव्युत्पत्त्याअपःकर्माणि । स्वप्रेरणयाप्राणिभिःक्रियमाणानिपुण्यकर्माणिदधातिसमर्पयतीति ॥ ४ ॥ तदि

**तदेजतितन्नैजतितद्दूरेतद्वंतिके । तदंतरस्यसर्वस्यतदुसर्वस्यबाह्यतः ॥ ५ ॥**
**यस्तुसर्वाणिभूतान्यात्मन्येवानुपश्यति । सर्वभूतेषुचात्मानंततोनविजुगुप्सते ॥ ६ ॥**

तिपंचम्यर्थेव्ययं । जगदितिशेषः । तत्तस्मात्प्रकृताद्धरेःजगदेजति । बिभेति । तद्ब्रह्मनेजतिनबिभेति । स्वतंत्रत्वादिति
भावः । तदुतदेवब्रह्मदूरे । तदुतदेवांतिकेसमीपेचसर्वगत्वादितिभावः । तद्ब्रह्मअस्यप्रमितस्यसर्वस्यांतः । तदुतदेवसर्व
स्यबाह्यतः । बहिरपि । सर्वव्यापित्वादितिभावः ॥ ५ ॥ तद्दूरइत्यादौहरेःसर्वभूताश्रयतयासर्वभूतगतत्वमुक्तं । तज्ज्ञानस्य
फलमाह । यस्त्विति । सर्वाणिभूतानिचिदचिदात्मकंसर्वजगत् । आत्मन्येवपरमात्माश्रयत्वेनैवास्तीतियस्त्वनुनिस्संदे
हंपश्यतिजानाति । यद्वाआश्रितत्वक्रमानुरोधेनेत्यनुशब्दार्थः । सर्वभूतेषुचात्मानंसर्वभूतेषुनियंतृतयास्थितंहरिंयोनुपश्यती

त्यन्वयः । ततःपरमात्मस्वरूपज्ञानित्वाद्धेतोर्नविजुगुप्सते । स्वात्मानंगोप्तुंनेच्छति । भयाभावादितिभावः ॥ ६ ॥ एतमेवा
र्थंविवृणोति । यस्मिन्निति । यस्मिन्नात्मनिसर्वाणिभूतानितिष्ठंतीतिशेषः । सआत्मैवतत्रसर्वभूतेष्वभूत् । अनादितोवर्ततइत्य
र्थः । एवमितिशेषः । एवंविजानतःसर्वाधारतयासर्वेषुभूतेषुआत्मानंविशेषेणजानतःसर्वत्रस्थितस्यहरेःएकत्वंचानुपश्यतःजा
नतःकोमोहःकःशोकःनकोपीत्यर्थः ॥ ७ ॥ भगवज्ज्ञानमात्रेणकुतोमोहाद्यभावइत्यतआह । सइति । सज्ञानी । पर्यगात्
प्राप्तोभूत्ब्रह्मेतिशेषः । तावताकथंशोकाद्यभावइत्यतस्तद्विशिनष्टि । शुक्रमित्यादिना । शुचंशोकंरहतित्यजतीतिशुक्रंशोकर

यस्मिन्त्सर्वाणिभूतान्यात्मैवाभूद्विजानतः । तत्रकोमोहःकश्शोकएकत्वमनुपश्यतः ॥ ७ ॥
सपर्यगाच्छुक्रमकायमव्रणमस्नाविरꣳशुद्धमपापविद्धं ।
कविर्मनीषीपरिभूस्स्वयंभूर्याथातथ्यतोर्थान्व्यदधाच्छाश्वतीभ्यस्समाभ्यः ॥ ८ ॥

हितं । अकायंलिंगदेहरहितं । अव्रणंव्रणसंचूर्णनइत्यतःस्तोकोव्रणः । कालेनास्तोकत्वादव्रणंनित्यं । गुणैरस्तोकत्वादव्रणंपूर्ण
मित्यर्थः । अस्नाविरं । स्नावोपलक्षितसप्तधातुमयस्थूलदेहरहितं । शुद्धंपावित्र्यहेतुंशुद्धत्वादेवापापविद्धं । ततएवहेतोःपाप
मूलस्थूलसूक्ष्मशरीरहीनं । ततएवदेहनिमित्तशोकादिशून्यमितिशुक्रमित्युच्यते । एवंभूतंहरिंपर्यगाद्यतोतःकारणाच्छोकाद्य
भावः । एवंभूतहरिसारूप्यलक्षणांतद्गतिंगतस्यशोकाद्यभावोयुक्तइतिभावः । नन्वेवमशरीरश्चेज्जगत्स्रष्टानेतिप्राप्तं । लोके

सदेहस्यैवस्रष्टृतादर्शनादित्याशंकांनिराह । कविरिति । कविःसर्वज्ञः । मनीषीप्रकृत्यादिसर्वमनसामीशितृत्वान्मनीषी ।
एतेनज्ञानाविनाभूतदेहवानितिलभ्यते । सचाप्राकृतएवेतिप्रागुक्तः । तन्निमित्तशोकाद्यभावोयुक्तः । प्राकृतस्यैवतद्धे
तुत्वात् । परिभवतिसर्वंवशीकरोतीतिपरिभूः । सर्वतोवरइत्यर्थः । स्वयमेवपरमनपेक्ष्यभवतीतिस्वयंभूः । सदानन्याश्रयः ।
शाश्वतीभ्यःसमाभ्यइतिपंचमीसप्तम्यर्थे । अनाद्यनंतसंवत्सरेषुयाथातथ्यतोयाथार्थ्येनवर्तमानानर्थान्व्यदधान्निर्ममे ।
याथातथ्यतइत्युक्त्याब्रह्मविवर्तत्वादर्थानांनतत्सृष्टौदेहाद्यपेक्षेतिचोद्यंनिरस्तं । शाश्वतीभ्यःसमाभ्यइत्युक्त्यासदादेहहीनस्या
पिसृष्टिसमयेदेहोपादानेनास्तुसृष्टिरितिचोद्यंनिरस्तंध्येयं । सृष्ट्यादिप्रवाहस्यानाद्यनंतकालीनत्वादिति ॥ ८ ॥ विजानतोऽनुप

**अंधंतमःप्रविशंतियेऽविद्यामुपासते । ततोभूयइवतेतमोयउविद्यायांरताः ॥ ९ ॥**

श्यतइत्यत्रयथावत्परमात्मज्ञानंमुक्तिहेतुरित्युक्तं । तज्ज्ञानंमिथ्याज्ञाननिंदासमुचितमेवमुक्तिहेतुर्नकेवलमित्याह । अंधंतमइत्या
दिमंत्रत्रयेण । तत्रतावद्यथावज्ज्ञानस्येवान्यथाज्ञाननिंदनस्यावश्यकत्वोपपादनायान्यथाज्ञानस्यप्रागुक्तमसुर्यलोकसाधनत्व
मनूद्यान्यथाज्ञानानिंदनस्यततोधिकानर्थहेतुत्वमाद्येनमंत्रेणोच्यते । अत्राविद्याशब्देनविद्याविरोधिमिथ्याज्ञानवाचिनातद्वि
षयोन्यथाप्रकारोग्राह्यः । तथाचअविद्यांयथावदाकारादन्यथाकारमुपासतेध्यायंतियेतेंऽधंतमःप्रविशंतीत्युक्तानुवादः । ये
विद्यायांउतत्वज्ञानएवरताः । मिथ्याज्ञानानिंदकाइत्येवकारार्थः । ते ततोमिथ्याज्ञानिप्राप्यतमसोवभूयःअधिकंतमः । इव



शब्दस्यव्यक्तमित्यर्थः । असंशयमितियावत् । प्रविशंतीत्यन्वयः ॥ ९ ॥ नकेवलंविपक्षेनर्थप्राप्तेरेवसम्यग्ज्ञानासम्यग्ज्ञाननिंद
नयोःकार्यत्वं । किंतुमोक्षफलस्यअंशतःउभयसाध्यत्वादपिद्वयोःकार्यत्वमित्याह । अन्यदेवेति । विद्ययातत्वज्ञानेनान्यदेवमो
क्षैकदेशरूपंफलंप्राप्यमाहुर्वृद्धाः ॥ अविद्ययाअन्यथाज्ञाननिंदयाचेतियावत् । अन्यदेवमोक्षैकदेशलक्षणंफलंप्राप्यमाहुर्वृद्धाः
इतिइत्येवंवृद्धवचनसंमतियुक्तंवचनंधीराणांधीमतांसकाशात्शुश्रुम । श्रुतवंतःस्म ॥ येधीरानोस्माकं मोक्षसाधनंविचचक्षि
रे । व्याचचक्षिरे । अतोद्वयमप्यावश्यकमितिभावः ॥ १० ॥ एतन्मंत्रार्थमेवव्यक्तमाह । विद्यांचेति । विद्यां विष्णुयाथात्म्य

**अन्यदेवाहुर्विद्ययाअन्यदाहुरविद्यया । इतिशुश्रुमधीराणांयेनस्तद्विचचक्षिरे ॥ १० ॥**
**विद्यांचाविद्यांचयस्तद्वेदोभयंसह । अविद्ययामृत्युंतीर्त्वाविद्ययाऽमृतमश्नुते ॥ ११ ॥**
**अंधंतमःप्रविशंतियेऽसंभूतिमुपासते । ततोभूयइवतेतमोयउसंभूत्यांरताः ॥ १२ ॥**

ज्ञानं । अविद्यांमिथ्याज्ञाननिंदनं । चशब्दावितरेतरयोगे । सहएकपुरुषार्थहेतुत्वेनतदुभयंयोवेदसइतिशेषः । अविद्ययाअ
न्यथाज्ञाननिंदयामृत्युंदुःखाज्ञानाद्यनिष्टंतीर्त्वा विद्ययाविष्णुयाथात्म्यज्ञानेन अमृतंआनंदानुभवलक्षणंमोक्षैकदेशंअश्नु
तेप्राप्नोति । अनिष्टनिवृत्तेर्मिथ्याज्ञाननिंदनसामर्थ्यलभ्यत्वादानंदानुभवस्यचतत्वज्ञानसामर्थ्यलभ्यत्वाद्देलद्वययुक्तमोक्ष
प्राप्तयेद्वयमप्यावश्यकमेवेत्युक्तंभवति ॥ ११ ॥ मिथ्याज्ञानमनर्थहेतुःतत्वज्ञानमेवमुक्तिहेतुरितिप्रागुक्तस्यविवरणंअंधं

तमइत्युत्तरमंत्रत्रयेणक्रियते । तत्राद्यस्यायमर्थः । असंभूतिंजगत्सृष्टेरकर्तारंसृष्टिकर्तानेत्युपासतइत्यर्थः । संभूत्यांउशब्द एवार्थोनेनान्वेति । संभूत्यांउसृष्टिकर्तृत्वएवरताः । भगवान्सृष्टिकर्तैवनसंहारकर्तेत्युपासतइत्यर्थः । प्राग्वदेवावशिष्टस्या र्थोध्येयः ॥ १२ ॥ नकेवलंविपक्षेनर्थसत्त्वादेवसृष्टिसंहारयोःकर्तृत्वंहरेर्ज्ञेयं । किंतुदलद्वययुक्तमोक्षोपयोगित्वादपीत्याह ॥ अन्यदेवेति । संभवात्हरेःसृष्टिकर्तृत्वज्ञानात् । असंभवात्संहारकर्तृत्वज्ञानादित्यर्थः । शिष्टंप्राग्वज्ज्ञेयं ॥ १३ ॥ एतन्मं त्रार्थमेवव्यक्तमाह । संभूतिंचेति । संभूतिंसृष्टिकर्तृत्वंविनाशंजगत्संहारकर्तृत्वंशिष्टंप्राग्वत् । सृष्ट्युपलक्षितानंतगुणात्मक

अन्यदेवाहुस्संभवादन्यदाहुरसंभवात् । इतिशुश्रुमधीराणांयेनस्तद्विचचक्षिरे ॥ १३ ॥
संभूतिंचविनाशंचयस्तद्वेदोभयꣳसह । विनाशेनमृत्युंतीर्त्वासंभूत्याऽमृतमश्नुते ॥ १४ ॥
हिरण्मयेनपात्रेणसत्यस्यापिहितंमुखं । तत्त्वंपूषन्नपावृणुसत्यधर्मायदृष्टये ॥ १५ ॥

त्वज्ञानादानंदानुभवः । विनाशकर्तृत्वज्ञानादखिलक्लेशनिवृत्तिरित्युभयरूपमोक्षायोभयज्ञानमावश्यकमितिभावः ॥ १४ ॥ एवमाद्यमंत्रद्वयेनोक्तदिशाप्राप्ताधिकारंशिष्यंप्रतिअनेजदेकमित्यादिनाभगवत्स्वरूपंनिरूप्ययस्तुसर्वाणीत्यादिसार्धमंत्रद्वयेन तत्साक्षात्कारोमोक्षहेतुरित्युक्तं । सचसाक्षात्कारोनश्रवणादिमात्रेण । किंत्वीश्वरप्रसादेनभवतीत्यतोनुष्ठितश्रवणादिकेनापि तत्साक्षात्कारार्थंभगवत्प्रार्थनंकार्यमितिभावेनप्रार्थनाप्रकारमाह । हिरण्मयेत्यादिनास्मरेत्यंतेनग्रंथेन । हिरण्मयमिवहिरण्म

यं । ज्योतिर्मयं । पिबतिरसान्त्रायतेजगदितिचपात्रं । तेनहिरण्मयेनपात्रेणसूर्यमंडलेन । सत्यस्यसद्गुणपूर्णस्यसूर्यमंडलस्थ स्यतवमुखं । उपलक्षणंचैतत् । वपुःसर्वदाऽपिहितंअस्ति। हेपूषन्पूर्ण । पुषपुष्टाविति धातोः । तद्वपुःत्वंसत्यधर्मायसत्यंभगवंतं हृदयेधारयतीतिव्युत्पत्त्यात्वद्ध्यानादिमतेभक्तायमह्यंदृष्टयेममत्वद्दर्शनार्थंअपावृणुअपगतावरणंकुरु ॥ १५ ॥ हेपूषन्पूर्णएक र्षेसर्वविषयकत्वादिनाप्रधानज्ञानवत्त्वहेतुनाएकर्षिशब्दवाच्यःसन्एकर्ष्याख्यमुनिस्थ । यमसर्वनियामकतयायमशब्दवाच्यः सन्यमांतर्गत । सूरिभिःप्राप्यत्वहेतुनासूर्यशब्दवाच्यस्सन्सूर्यांतर्गत । प्राजापत्यप्रजापतेर्हिरण्यगर्भस्यविशेषेणप्राप्यतयाप्रा

**पूषन्नेकर्षेयमसूर्यप्राजापत्यव्यूहरश्मीन्त्समूहतेजोयत्तेरूपंकल्याणतमंतत्तेपश्यामि ॥ १६ ॥**

**योसावसौपुरुषस्सोहमस्मि ॥ १७ ॥**

जापत्यशब्दवाच्य । रश्मीन्मदीयंस्वरूपज्ञानंव्यूह । विस्तारय । तेजोबाह्यज्ञानंचसमूह । विस्तारयेत्यर्थः । तेजइतिस्वरूप ज्ञानं । रश्मीनितिबाह्यज्ञानंवा । तथाचयत्तेरूपंकल्याणतमंतद्रूपंतेप्रसादादहंपश्यामीति । आदित्यरश्म्यादीनांअपगमना दिनातदंतर्गतप्रतीत्यसंभवादादित्यरश्म्यादिविषयंव्याख्यानमयुक्तं ॥ १६ ॥ सर्वजीवोत्तममुख्यवायुरूपप्रतीकस्थित्यादिज्ञा नमावश्यकमितिभावेनतत्स्थित्यादिकमाह । यइति । योसौप्रसिद्धोऽसौमुख्यप्राणेस्थितइतिशेषः । सोऽहेयत्वादहमित्युक्तः सदास्तित्वेनमेयत्वहेतुनाअस्मीतितिङ्प्रतिरूपकाव्ययपदपवाच्यःतंपश्यामीत्यर्थः।यद्वाअसावसावितिद्वयमपिप्रथमांतमेववी

प्सायांद्विरुक्तिः । पूर्वंपूषादिशब्दैरुपलक्षणतयाप्राणाद्यनेकप्रतीकस्थत्वंविष्णोरुक्तं। तत्रभेदशंकायांयोसावितिवाक्यमुच्यते ।
योसावसौपुरुषः(पूषाद्य)प्राणाद्यनेकप्रतीकेषुस्थितःसोहमस्मि मदंतर्यामितयास्तीत्यर्थः । सर्वप्रतीकेषुमयिचस्थितएकएवेतिफ
लितोर्थः । अहंपदस्यप्रत्यगात्मजीवांतर्यामिणिमुख्यतयातत्समभिव्यहारादस्मीत्युत्तमपुरुषप्रयोगोपिसाधुरेवेतिज्ञेयं ॥ १७ ॥
ननुपरमेश्वरस्ययत्कल्याणरूपत्वमुक्तंयच्चसोहमस्मीतिजीवांतर्गतस्यनित्यास्तित्वमुक्तंतन्नयुक्तं । देहनाशस्यप्रत्यक्षादिसिद्धत
यातदंतर्गतस्यजीवस्येवमरणाद्यवश्यंभावादित्याशंकांकैमुत्येननिराह । वायुरिति । यद्यपीदंशरीरंभस्मांतं । तथापितदंतर्ग

**वायुरनिलममृतमथेदंभस्मांतꣳशरीरं ॥ १८ ॥**
**ॐक्रतोस्मरकृतꣳस्मर ॥ ॐक्रतोस्मरकृतꣳस्मर ॥ १९ ॥**

तस्यहरेर्नमरणादिदोषप्रसक्तिः। कुतःअनिलं । अः ब्रह्मैवनिलंनिलयनंआश्रयोयस्यसोऽनिलः । परमेश्वराश्रितोवायुरपियदाऽ
मृतःनित्यःअथतदापरमेश्वरोमृतइतिकिमुवक्तव्यमित्यर्थः । अनिलामृतपदयोःलिंगव्यत्ययोज्ञेयः । वायोरमृतत्वंनित्यज्ञानत्वे
नज्ञेयं । अतिरोहितविज्ञानाद्वायुरप्यमृतःस्मृतइत्युक्तेः । एतेनमातरिश्वाव्याख्यातइत्यत्रभाष्यादौतथानिर्णयाच्चेति ॥ १८ ॥
अथप्रणवप्रतीकंप्रार्थयते । ॐमिति । ॐतत्वादिगुणयुक्ततयाओमित्युच्यमान । क्रतो ज्ञानरूपहरे । मामितिशेषः । ॥ ५ ॥
स्मरअनुगृहाण । कृतंमदीयंध्यानादिकंकर्मस्मर । ध्यानादिनामयाकृतेनमय्यनुग्रहोन्मुखोभवेत्यर्थः । नित्यज्ञप्तिस्वरूपस्यसं
स्कारजन्यस्मरणायोगात् । अभ्यासस्तात्पर्यार्थः ॥१९॥ कृतश्रवणादिनापुरुषेणसाक्षात्कारार्थंहरेःप्रार्थनंकार्यमित्यतस्तत्प्रकारं
हिरण्मयेनेत्यादिनोक्त्वाअधुनाप्राप्तसाक्षात्कारेणापिपुंसामोक्षार्थंभगवदुपासनंकार्यमितिभावेनअग्निप्रतीकस्थभगवत्प्रार्थनाप्र
कारमाह। अग्नइति । अंगंदेहंगुणभूतंजगद्वानयतिप्रेरयतीतिव्युत्पत्त्याअग्निपदमुख्यार्थस्सन्नग्नौविद्यमानहरे । अस्मान्सुपथा
पुनरावृत्तिहीनार्चिरादिमार्गेणरायेमोक्षाख्यवित्तायनय । कुतः । हेदेवअस्मदनुष्ठितानिविश्वानिसंपूर्णानिमोक्षायपर्याप्तानी
तियावत् । वयुनानिज्ञानानिभवान्विद्वान्वेद । प्रारब्धकर्मयुक्तस्यकथंमोक्षइत्यतउक्तं । युयोधीति । अस्मानित्यत्राप्यनुष

**अग्नेनयसुपथारायेअस्मान्विश्वानिदेववयुनानिविद्वान् ।**
**युयोध्यस्मज्जुहुराणमेनोभूयिष्ठांतेनमउक्तिंविधेम ॥ २० ॥**
**ईशावास्योपनिषत्संपूर्णा ॥**

ज्यते । अस्माञ्जुहुराणंअल्पान्कुर्वत्संसारेपरिवर्तयदितियावत् । एनःपापं अनिष्टंकर्मेतियावत् । अस्मत् । अस्मत्तःयुयोधि
वियोजय । युयुवियोगइतिधातोर्लुग्विकरणं । वयंतुतेतुभ्यंभूयिष्ठांभक्तिज्ञानोपेतांनमउक्तिंनमइत्युक्तिंविधेमकुर्मः । नतुतत्प्र
तिकर्तुंशक्तुमइति ॥ २० ॥ समस्तगुणपूर्णायदोषदूरायविष्णवे ॥ नमःश्रीप्राणनाथायभक्ताभीष्टप्रदायिने ॥ ईशावास्योपनि
दोभाष्याद्युक्तार्थसंग्रहः ॥ राघवेंद्रेणयतिनाकृतोयंशिष्ययाज्ञया ॥ इतिश्रीमदीशावास्योपनिषत्खंडार्थस्संपूर्णः ॥ ७ ॥ ॥

( अयं ग्रंथः अ. रामाचार्य, टी. आर्. कृष्णाचार्यनामभ्यां मुंबय्यां निर्णयसागरमुद्रणयंत्रे मुद्रयित्वा प्रकाशितः । शके १८१८ )

